श्री॥ गोत्रिरात्रव्रतोद्यापनविधिर्लिख्यते। नभस्ये चासिते पक्षे त्रयोदशी च या तिथिः। सूर्योदये समुत्थाय
दंतधावनपूर्वकं॥ कुर्यात्स्नानं ततश्चैव स्थापयेत्कमलापतिं। लक्ष्मीनारायणस्याग्रे त्रिरात्रापोषणं यहः।
प्रथमं कलशं स्थाप्य द्रव्यतोयेन पूरितान्। कुंभोपरि न्यसेत्पात्रं यवगोधूमतंडुलैः। पूर्णं तत्र प्रकर्त्त
व्या विसोदाः पश्च नित्यशः। प्रदक्षिणां सवत्सायां धेनोः कुर्याद्दिनादिने। मुकुरे किंकिणीमालाशीर्षे
नित्यं च वेष्टयेत्। दातघंटाजपूजादि येवाहारं दिने दिने। गोमयात्तु मयैकैकं प्राश्य शेषपरायणो। अथ नि
यमग्रहणमंत्रः। गोविंदचऊणंमाय गोवर्धनधराय च। गोत्रिरात्रं करिष्यामि शरणं मे भवाच्युतः।
दिनत्रये व्यतिक्रांते परिपूर्णे व्रते तव। करिष्ये पारणं मातव्रतमेपूर्णमस्त्विति। समुपोष्य त्रिरात्रं तु भ
क्तिनसाततः स्वयं। भोक्ष्येहं च चतुर्थेह्नि सौभाग्यं देहि नो मम। पूजां करोमि देवदेवेश प्रसादात्तव केशव।
शरणं मे जगन्नाथ निर्विघ्नं कुरु मे प्रभो। इति प्रार्थ्य। पंचामृतैश्च श्रीखंडैः कुसुमैश्चार्चयेत्ततः। शतप
त्रैश्चंपकाद्यैः पुष्पैः पूजां प्रकल्पयेत्। धूपदीपैश्च नैवेद्यैः [illegible]नामभक्ष्यैश्च तोषयेत्। पूजामंत्रः। पादौ नमा
मि बलिदानवमर्दनाय जानू नमामि भुवनत्रयपालनाय। कट्यौ नमामि [illegible] मल्लारमणाय चित्ते
योगीश्वराय करवक्त्रशिरः सुधात्रे। अर्घमंत्रः। क्षीराब्धिसुतसंवास वासुदेव जगत्प्रभो। गृ
हाणार्घं मया दत्तं सौभाग्यं देहि मे प्रभो। प्रथमे नालिकेरेण द्वितीये बीजपूरकैः। तृतीये हनि कू
ष्मांडं एते अर्घाः प्रकीर्त्तिताः। कूष्मांडैर्नालिकेरैश्च बीजपूरैश्च दाडिमैः। अर्घं दद्याद् गा माकांते काम
धेनो तथैव च। ततो गोपूजा। मंत्रः। गावो ममाग्रतः संतु गावो मे संतु पृष्ठतः। गावो मे हृदये संतु

© Dharmartha Trust J&K. Digitized by eGangotri

१ गवां मध्ये वसाम्यहं। पंच गावः समुत्पन्ना मथ्यमाने महोदधौ। तासां मध्ये तु या नंदा तस्यै
धेन्वै नमो नमः। या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता। धेनुरूपेण सा देवी मम पा
पं व्यपोहतु। नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्यो नमो नमः। नमो ब्रह्मसुताभ्यश्च पवित्रे
भ्यो नमो नमः। ॐ आधारे भूताधारे देवपितृचरुव्यदे। आसेविता मर्यादे विमम पापं व्य
पोहतु। सर्वदेवमयी दोग्ध्री सर्वदेवमयी तथा। या सा कामदुघा नित्यं तस्यै धेन्वै नमो नमः।
ब्रह्मणोत्पादिते देवि सर्वपापविनाशिनी। संसारार्णवमग्नानां गो माता त्रातुमर्हसि॥
सुरूपा बहुरूपाश्च मातरो लोकमातरः। गावो मामुपसर्पन्तु सरितः सागरे यथा। अदि
तिर्देवमाता च वेदमाता पृथ्वीश्वरी। धेनुरूपेण सा देवी मम पापं व्यपोहतु। सुभद्रा सुर
भी नंदा सुशीला नंदनी तथा। समुद्रमथनोत्पन्ना पंच गावः प्रसीदतु। ॐ पूजा। इडायै०
रंतायै० हव्यायै० काम्यै० चंद्रायै० ज्योत्यै० अदित्यै० सरस्वत्यै० मह्यै० विश्रुत्यै० अघ्न्यायै०
उस्रायै० उस्त्रियायै० अह्न्यै० ऊर्जत्यै० शक्त्यै०। गवामर्चं प्रदातव्यं सायाह्ने तु दिनत्र
यं। गोऽर्घः। क्षीरोदधिसमुद्भूते रक्षार्थं च दिवौकसां। जगति त्वं सर्वभूतानां गृहाणा
र्घं प्रसीद मे। रुद्राणां चैव या माता वसूनां दुहिता च या। आदित्या भगिनी चैव गृहा० ते
गोग्रासमंत्रः। हविष्यान्नं नैवेद्यं चारये यवसंयुतं। सुरभीर्वैष्णवी माता नित्यं वि

© Dharmartha Trust J&K. Digitized by eGangotri

सुपदेस्थिता। प्रतिगृह्णन्तु मे ग्रासं सुरभी मे प्रसीदतु। करसंपुटं सत्वा कामधेनोरग्रे वाचयेत्।
रोगान्निहन्तु मम कामदुघा प्रसन्ना पापानि हन्तु मम। ना। शत्रून्निहन्तु मम। नाशो ष्वीनि हन्तु। ना। आयु
र्ददातु। पुत्रान्ददातु। लक्ष्मीं ददातु। सौख्यं ददातु। वियोगो सुपुत्रैर्न्यो भर्त्तान्न सह बांधवैः। त्वत्प्रसा
देन मच्छिमे निष्ठ्वन्तां मे सदा त्वपि। मातरः सर्वभूतानां गावः स्वे लो... दिता। यस्मादे
ब्रह्मणास्तेषां धेनवो लोकमातरः। दातुः कुशलं तां धेनुं दत्त्वा तारयन्ते ध्रुवं। पूजिता च स्तुता सा
मे सौख्यं पुत्रान्ददातु मे। इति। एवं संपूज्य गावश्च गोविंदं च दिनत्रयं। भूमौ च शयने कार्यं ब्र
ह्मचर्यं समन्विता। पाखंडालाय मन्ते तक्रोर्ध्वं चैव विवर्जयेत्। मौने दिनत्रयं कार्यं पूजाका
ले तथा पिवा। ।। तृतीये दिवसे प्राप्ते वंशपात्रत्रयं ततः। सप्तधान्यैर्विरूढैश्च वंशपात्रस्थितैः। पु
मैः। सुवासिन्यस्तथा पूज्या नित्यं तांबूलकुंकुमैः। इति ।। ।। अथ तदुद्यापने कार्यं व्रतं संपूर्णसि
द्धये। गोष्ठे वा गोपथे वापि स्वस्य वा भूमिगृहे शुभे। अष्टहस्तं चतुर्हस्तं वा चतुरस्रं सुशोभनं सु
धाधवलितं कृत्वा तत्र कुर्वीत शोभनं। वितानैः पुष्पमालाभिः फलैर्नानाविधैरपि। रात्रौ
हि सर्वतोभद्रं मंडलं च प्रकल्पयेत्। आचम्यादि प्रयोगपूर्वकं ब्राह्मणानां वरणं करण श्रा
द्धं पुनः स्वस्तिवाचनं। अस्य या। सर्वं संकल्प्य पश्चात् मंडले प्रागत्य देशकालौ स्मृत्वा मध्ये

© Dharmartha Trust J&K. Digitized by eGangotri

कलशे संस्थाप्य सुवर्णमाषतः कार्याः षोडश प्रतिमाः शुभाः। माषकेन सुवर्णेन लक्ष्मी
नारायणं शुभं पाठः। अग्न्युत्तारणपूर्वकं प्रतिष्ठां कुर्यात्। गोवर्द्धनधरः कर्त्तव्यो राजतः प
लसंमितः। छत्राकारो महावृक्षैः शोभितः पक्षिभिः शुभैः। गोपगोपीसमाकीर्णो महावृ
क्षसमन्वितैः। सर्वं लक्ष्मीनारायणोद्देशे पूर्ववद्विधिपूर्वकं। पूजा। श्रीलक्ष्मीनारा
यणाभ्यां नमः। देहांगन्यासः। आगच्छ भगवन्कृष्ण गोपगोपीसमन्वितः। रुक्मिण्या
दिभिराज्ञीभिर्मम पूजां गृहाण च। आवाहनं। आसनं। पाद्यं। अर्घ्यं। आच॰ पंचामृत॰।
शुद्धोदकस्नानं। करोमि देवदेवेश प्रसादात्तव केशव। गोपुच्छे निवसत्तत्र स्नानं
कुर्याद्व्रती तदा। स्नानं आच॰। वस्त्रं। आच॰। यज्ञोपवीतं। आच॰। चंदनं। पुष्पं। विशेषः। श्रीअन
न्ताय नमः। पादौ। हरये॰ जानौ। बलदेवाय॰ उदरे। मुकुंदाय॰ कक्ष्यां। चक्रिणे॰ भुजौ। श्री
केशाय॰ कंठे। पद्ममुखाय॰ मुखे। गोविंदाय॰ शिरसि। इत्यंगे पूजयेत्। आवरणपू
जा। केशवाय॰ विष्णवे॰ अनंताय॰ वासुदेवाय॰ हृषीकेशाय॰ पद्मनाभाय॰ जना
र्द्दनाय॰ दामोदराय॰ माधवाय॰ त्रिविक्रमाय॰ अनिरुद्धाय॰ अधोक्षजाय॰ हरये॰
श्रीधराय॰ मत्स्याय॰ कूर्माय॰ वराहाय॰ नृसिंहाय॰ वामनाय॰ परशुरामाय॰ रघुना

© Dharmartha Trust J&K. Digitized by eGangotri

याय॰ बलभद्राय॰ बुधाय॰ कल्किने॰ नारायणाय॰ रुक्मिण्यै॰ मित्रविंदायै॰ ज
म्बुवत्यै॰ यशोदायै॰ बलभद्रायै॰ नंदायै॰ सुनंदायै॰ सुभद्रायै॰ सुशीलायै॰ सुरभ्यै॰
का मध्ये नवे॰। दिव्यात्न पूजा। गोवर्धनधराधार गोकुलत्राणकारक। विष्णुबाहुकृ
तोद्धार प्रजयामिन गोतमः। अर्घः। क्षीराब्धि सतसंवासे वासुदेव जगत्पते। गृहाणा
र्घ्यं मया दत्तं सौभाग्यं देहि मे प्रभो। गोत्रिरात्रव्रतार्थाय फलं मम कुरु व्रतं। सर्वका
म प्रदाने नम्र ह॰ त्त। धूप। दीप। नैवेद्यं। आचमनीयं। नमस्कारः। प्रदक्षिणा। दक्षि
णा। आरात्रिका। पुण्याहे दीर्घमायुरित्यादि। विप्रभोजन संकल्पः। गोः उमामहेश्व
रापदा। शय्या। उपानह। तिल पात्र। घृत पात्र। भयसीवा। यस्य स्मृत्या॰। एवमुद्यापनं
कार्यं व्रतसंपूर्णहेतवे। रात्रौ जागरणं कुर्याद् गीत वाद्य कौतुकैः। ततः प्रभाते स
मये होमं कुर्याद् यथाविधि। देवं धेनुं च विप्राय विधिवत्परितोषजेत्। पदे पदे अश्वमे
धस्य फलं प्राप्नोति निश्चितं। यथाशक्त्या च दानानि दत्वा बन्धुजनैः विसर्जयेत्। परिपू
र्णव्रते तु वाद दत्ता कामान्मनीषितान्। अपरस्वेप धवागोष्ठमातर्गच्छ यथा सुखं। विस
र्जनं। धन्योस्मि संतसत्योस्मि कामश्च मे प्रसादतः। सर्वकामे विनिर्मुक्तो यो

© Dharmartha Trust J&K. Digitized by eGangotri

२

स्यामिहरिसंनिधौ। गावोरक्षंतुमेपुरायं गावोरक्षंतुमेयशः। गावोरक्षंतुमेसर्वंपुत्रपौत्रकलत्रयं। नमोस्तुकामधेनुभ्ययाःपुनंतिजगत्त्रयं। यदाधारस्थितंसर्वंनराग्निभ्यःपुनःपुनः। उद्यापनांते। विष्णुमंत्रेण होम ।१०८। अभिषेकः। आशीर्वादः। इति गोत्रिरात्रव्रतोद्यापनविधिः समाप्ता॥ संवत १९४० ज्येष्ठ शुदी ३ शनौ दीक्षीप विष्णुदेव तत्सुत रूपदेवेन लिं॰

गोत्रिरात्रव्रतोद्यापनविधिः

© Dharmartha Trust J&K. Digitized by eGangotri